# GAṄGĀNĀTHA JHĀ GRANTHAMĀLĀ

( 4 )

General Editor

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'

Director, Research Institute

Varanaseya Sanskrit Vishvavidyalaya

Varanasi



# VIṢṆUDHARMOTTARAPURĀṆAM

[ CITRASŪTRAM ]

By


**Dr. ASOKE CHATTERJEE ŚĀSTRĪ,**

M. A. (Double), D. Phil., Vācaspati, Mahopādhyāya, D. Lit., Dip. Ger., Griffith Prizeman (Double), Umesh Chandra Vidyāratna Prizeman,

Professor and Head of the Department of

Purāṇetihāsa

Varanaseya Sanskrit Vishvavidyalaya

Varanasi



VARANASI

**1971**

गङ्गानाथ झा-ग्रन्थमाला
( ४ )

प्रधानसम्पादकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थानसञ्चालकः
वाराणसेयसंस्कृतविश्वविद्यालयस्य



# विष्णुधर्मोत्तरपुराणम्

## ( चित्रसूत्रम् )

सम्पादकः
डॉ० अशोक चटर्जी शास्त्री
एम, ए० ( द्विनयम् ) डी० फिल्, डी० लिट्, डीप् जर्, पञ्चतीर्थः; महोपाध्यायः,
प्रीफीथ प्राईजमैन ( द्विवारम् ) उमेशचन्द्रविद्यारत्न प्राईजमैन
प्राध्यापको विभागाध्यक्षश्च
पुराणेतिहासविभागे
वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी

वाराणस्याम्

# प्रास्ताविकम्

चित्रशब्दस्य मौलोऽर्थो नानावर्ण इति। ऋग्वेदसंहितायां नानावर्णच्छटामनुध्यायता ऋषिणा वर्णितं सूर्योदयप्रसङ्गे—"चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः" (१,११५,१) इति। यद्यपीह सायणेन सूर्यस्य मण्डलम् आश्चर्यकरमिति प्रत्यपादि, तथापि सूर्यमण्डलस्य नानावर्णच्छटासंवलितत्वं प्रासङ्गिकम्। अयमर्थः परतोऽपि संस्कृतवाङ्मये लोकभाषासु चातिरोहितः। शबलत्वादेव चित्रसपत्ति। कामं भवेत् सा रेखादिभिर्वा बिन्दुभिर्वा। नानावर्णकबिन्द्वादीनां चयनेनैव चित्रम्। निरुक्ते (१२,६,१) तु चित्रं चायनीयं मंहनीयं धनमिति। तद् धनं हैमं शबलगत्वादिरूपं वा भवेत्। मणिमुक्तादिरूपेण बाहुविध्य-रूपोऽर्थश्चित्रशब्दस्य (ऋ० १,९,५) द्रष्टव्यः। नानावर्णो भवति कर्बुरः, तिलकरूपो वा। अत एव शर्पनक्षममयूरादिष्वस्य शब्दस्य प्रयोगः सामान्यः। ऋग्वेदसंहितायां (४,३२,२) चित्रिणी नाम चित्रकर्मयुक्ता—'चित्रं चित्रिणीष्वा। चित्रं कृणोष्यूतये' इति। 'स चित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम्' (६,६,७) इह चित्रशब्दो वैचित्र्यार्थपरः—चित्रक्षत्र = विचित्रबल, चित्रतमम् = अतिशयनाश्चर्यभूतमिति। उप काले रश्मिशब्दस्य विशेषणीभूतं चित्रं विचित्रार्थकमाश्चर्यार्थकं वा। एवं शावचित्रे दीप्तिरपि। भारोपीयभाषायाम् आद्य-कण्ठ्यवर्णः—'(स्) काइत्' इति। दीप्तता स्पष्टता चेति तदाकूतम्। अवेस्ताभाषायामपि चित्रपदमभिव्यनक्ति तादृशमेवार्थम्। प्रादेशिकीषु भाषासु नानावर्ण-चिह्नयुक्तरूपोऽर्थो दृश्यते। तानि चिह्नानि केवलं राजतरूपाण्यपि भवितुं शक्यन्ते। 'सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः' इति वाल्मीकीयं रामायणमनुशीलनीयम्।

भारते वर्षे चिराय भित्तिचित्राङ्कप्रथा ज्ञायते। अनेकत्र गुहाभित्तिषु शिलासु वा रचितानि तादृशानि चित्राणि चिरात् सुरक्षितानि। इदमाद्यं भवेत् स्वरूपम्—'धीनं चित्रीयते यस्मादभित्तौ चित्रकर्मणा' (कथास० ६,५०)। चित्रणार्थे वाल्मीकीये रामायणे चित्र-कर्मेति शब्दः। 'चित्रेण कर्मणा' इत्यृग्वेदसंहितायाम् (८,३६,५) अपि प्रयुक्तः। परतस्तु तज्जातं क्रियाकौशलेन शिल्पाभ्यन्तरम्। 'शिल्पेन व्यवहारेण' इति मनुस्मृतिश्लोकं व्याख्यात-वता कुल्लूकभट्टेन चित्रकर्मादिशिल्पेन कर्मणेति व्यक्तम्। पाणिनिना शिल्पशब्दस्य प्रयोगः कौशलरूपोऽर्थे कृतः (द्र० ४,४,५५)। अत एव मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः, माड्डुकिकः, झार्झरिकः, सुषो शिल्पमस्य मौषिकः, शाङ्खिकः, काम्बविकः, शौल्विकः, मौरजिकः, वैणिकः, वैणविक इत्यादयः प्रयोगा ऊह्याः। क्वचित् तु पञ्चैव शिल्पिनो मताः—

'तक्षा च तन्तुवायश्च नापितो रजकस्तथा।
पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः॥' इति।

तत्र सध्रीचीनम 'शिल्प कर्मकलादिकम्' ( अमर० २ १० ३५ ) इत्यत्र कला नृत्यगीतादिरूपा चतुःषष्टिभेदभिन्नेति। आदिना सुवर्णकारादिकर्मकरग्रहः। अत एव शिल्पिनि ष्वुन्' ( ३,१,१४५ ) इति पाणिनीये सूत्रे शिल्पशब्दस्य क्रियाकौशलार्थकत्वाद् नर्तक-रजक-गायकादीनामपि शिल्पित्वम्। विष्णुधर्मोत्तरपुराणे गीतनृत्यवादित्रचित्रमूर्तीत्यादिरूप क्रमो वर्णित। इमे सर्वे गीतकारादयः शिल्पिन इत्यभिव्यक्ति।

महाबैवर्तपुराणाधारेण चित्रकर्मव्यवसायिनामुत्पत्ति शूद्रागर्भे विश्वकर्मणः सकाशाद् वर्णिता। पराशरपद्धतौ तु 'स्थपतेर्गदि मान्धिकया चित्रकारो व्यजायत' इति। रामायणकाले महाभारतकाले चेय जातिर्गनियत— चित्रकार इवालेख्य कृत्वा स्थापितवानसि' ( ५,१४७ २१ ) इति। महाभारते 'पटे चित्रमिवार्पितम्' ( १३ पर्वणि ) इत्यपि दृश्यते। कालिदासेन सुलभम 'उन्मीलित तूलिकयेव चित्रम्' ( कुमार० १,३१ ) इति चित्रनिर्माणोपकरणचर्चा कृता। त त्रशास्त्रे क्रियापादान्तर्भिन्नमूर्तिमन्दिरादिनिर्माणविधिर्दर्शनीय।

शिल्परूपण चित्राङ्कनप्रक्रमा भवेदालेखनेनति तत्पर्याय आलेखनमित्यपि। ऋग्वेदसंहितायाम् ( ६,५३,७ )— आ रिख किकिरा कृणु पणीना हृदया कवे' इत्यत्र पणीनाम = वणिजाम, हृदया = हृदयानि आ रिख = आलिखेत्यर्थं। एवमेव रेखैव लेखा। चित्रादिरूनाभी रेखाभिरेव चित्रप्रपनम। विष्णुधर्मोत्तरपुराणे सहकाररसेन कामिन्याश्चित्र पृथिव्या नारायणो मुनिर्विदधाविति चित्रारम्भकथा। पृथिव्या रजोबहुलाया रेखा अन्तरा न सभवश्चित्रनिर्माणस्येति तदालेख्यम्। 'आलेख्ये चैव लेख्ये च निष्णात.' इति 'अष्टापदपदालेख्यं रम्यामालिखितामिव' इति च रामायण वर्णनेन शिल्पकलताऽनेन कर्मणेति स्पष्टम्। 'अहोरूपमालेख्यस्य ( शाकु० ), 'सुवदनामालेख्येऽपि प्रिया समवाप्य' (विक्रमो०) इति कालिदासेन स्ववयवसस्थानस्याद्यतनचित्रस्येव सुपरिचायकत्व निर्दिष्टम्।

रेखाश्चित्राधारक मूर्तिनिर्माणम। वास्तुग्रन्थानामाधारेण चित्रमूर्त्योरभेद। विष्णुधर्मोत्तरपुराणेऽपि चित्रवर्णनामत्तो व्यासो मूर्तिलक्षणमुक्तवान्। यद्यपृग्वेदसंहितायां प्रतिमाऽस्ति वा नास्ति वेति भृश जातो विमर्श, तथापि मयह दशममण्डलीय. (१०,१३०,३) मन्त्र उद्ध्रियते—

क्वासीत् प्रमा प्रतिमा किं निदानमाज्य किमासीत् परिधि क आसीत्' इति। विश्वसर्जनोपायरतन प्रजापतिना सृष्टे यज्ञे विश्वस्य स्रष्टारो विश्वसृजो देवा विश्वसर्जनाय त यज्ञमन्वतिष्ठन्। तस्मिन् समये जगतोऽनुत्पत्तेर्जगदन्त पातिनो यागोपकरणभूता पदार्था कथमासन्निरत्यनया प्रश्न क्रियते। यदा सर्वे देवा प्रजापतिमयजन्त तदानी तस्य यज्ञस्य प्रमा = प्रमाणम इयत्ता कथभुताऽसीत्। हविष्प्रतियागित्वेन मीयते = निर्मीयत इति प्रतिमा = देवता। सिन्धुसभ्यतावशेषेषु प्रतिमाप्राप्तिश्चिरात् साधयति तदीया सत्ताम्।

रामायणे ( ६, ७२ ३५ ) 'प्रतिमा साध्वी हत्वा सीतेयमिति दर्शिता' इति प्रतिमानिर्माणप्रमाणम्। 'प्रतिमाश्च प्रकम्पन्ते' इत्येतादृशानि बहून्युदाहरणानि तत्र विद्यन्ते।

महाभारते स्वायसीनां हिरण्मयीनां च प्रतिमानामुल्लेखः। तत्र ( ६, १, ७६ ) प्रतिमानामालेखनमप्युदाहृतम्। हरिवंशपुराणे तु लवणकाष्ठमय्योऽपि प्रतिमा वर्णिताः। शत्रुञ्जयमाहात्म्ये ( १०, १८७ ) प्रतिमामन्तरा प्रासादस्य नैरर्थक्यं साधितम्। एवं तावत् प्रासादनिर्माणात् प्रभृत्येव सिद्ध्यति चित्रमूर्त्यादीनां रचना। महामुनिपाणिनिकाले तृणचर्मकाष्ठादिनिर्मितस्य प्रतिमापरपर्यायस्य प्रतिकृतेरासीत् सुप्रतिष्ठितो व्यवहारः। वन्यजीवेभ्यः शस्यादीनां रक्षणार्थं तृणमयस्य पुंसो रचनापि पाणिनीये काले विज्ञाताऽभूत्। देवलकानां जीविकार्थास्वविक्रीयमाणासु प्रतिकृतिषु कन्प्रत्ययस्य लुप्त्वाद् वासुदेवः, शिवः स्कन्द इत्यादयः प्रयोगा विज्ञायन्ते। देवलका वासुदेवादीनां प्रतिमाः प्रतिगृह्य गृहाद् गृहं भिक्षमाणा अटन्ति। तदुक्तम्—

अर्चासु पूजनार्हासु चित्रकर्मध्वजेषु च।
इमे प्रतिकृतौ लोपः कनो देवपथादिषु ॥ इति।

भारते वर्षे सुचिराद् विद्यते वास्तुविद्याप्रतिष्ठेति नास्ति विवादावसरः। ऋग्वेदसंहितायां प्रथितः पाकशासनो वास्तोष्पतिरूपेण वास्तुविद्याधिपतितया। मत्स्यपुराणेऽष्टादशसंख्याकानाम् आचार्याणां नामान्यासाद्यन्ते। तत्र पुरन्दरस्याप्युल्लेखः। अग्निपुराणे पञ्चविंशतिसंख्याका बृहत्संहितायां च पराशरकश्यपभरद्वाजा इति त्रय आचार्या उल्लिखिताः। एवमेवान्यान्यपि दृश्यन्ते नामानि वास्तुशास्त्रोपदेशकानाम् आचार्याणाम्।

पुराणं खलु वेद-वेदाङ्ग-दर्शन-भूगोल-खगोल-वास्तु-साम्यप्रभृतीनां विद्यानां विवरणात्मको विश्वकोश इति विदन्त्येव विविधविद्याविद्योतमानमानसा विद्वांसः। महापुराणातिरिक्तोपपुराणादीनामसङ्ख्येयता। यद्यपि तेषां सर्वेषां समालोचनात्मकानां संस्करणानां प्रकाशनाय बहुः प्रयत्न आरभ्यते, तथापि नाद्यापि समजनि गौरवं तदीयम्। उपलभ्यमानेषु पुराणेषूपपुराणेषु च वास्तुविद्यासामग्र्या वास्तुशास्त्रगतसामग्र्या सह, विविधप्रदेशस्थैः शिल्पिभिः साम्प्रत्यपि प्रयुज्यमानशब्दैश्च सह तुलना महते लाभाय सम्भवेत्। काश्यपशिल्पशास्त्रे षट्त्रिंशत्पटलेषु ( षट्चत्वारिंशत्पटलाद् एकाशीतितमपटलं यावत् ) विविधानां मूर्तीनां लक्षणानि वर्णितानि। सम्बुद्धभाषितं बुद्धप्रतिमालक्षणम् इति शिल्पशास्त्रीयं पुस्तकमपि सरस्वतीभवनमालायां प्रकाशितचरम्।

महायानसम्प्रदाये बुद्धप्रतिमा निर्मीयते स्म, न तु हीनयानसम्प्रदाये इति इयोर्भेदं व्याचक्षाणानां केषाञ्चिद् विश्वासः। हीनयाने सर्वेषामेव देवानां कृता मूर्तय इति नास्ति तादृशो विश्वासे किमपि तथ्यम्। सिंहलदेशान्तर्गतेऽनुराधपुरे सुविशाला बुद्धप्रतिमा दर्शकजनमनोहारिणी। सिंहलो हीनयानस्य महत् केन्द्रम्। तत एव हीनयानस्य बौद्धधर्मस्य च प्रसारो नेदीयस्सु श्यामब्रह्मादिदेशेषु सञ्जातः। बुद्धप्रतिमानिर्माणप्रकारो पुनः यावनशिल्पप्रभावविनिर्मुक्तः। हीनयानसंप्रदाये भगवतो बुद्धस्य प्रतिमा प्राचीनैर्विनिर्मिता। सत्य

भगवतस्तथागतत्वसूचनाय तल्लीलोद्बोधकानि चिह्नान्येव प्रदर्शितानि—जन्मसूचकं पद्मम्, निष्क्रमणसूचकोऽश्व, बोधिप्राप्तिसूचकश्चाश्वत्थ इति ।

विष्णुधर्मोत्तरपुराणान्तर्गतं चित्रसूत्रमिदं डॉ० अशोकशास्त्रिमहोदयेन पञ्चमातृका उपजीव्य महता परिश्रमेण सम्पादितम् आलीढप्रत्यालीढादिमुद्राणां चित्रैर्युतम् । चित्राणां परिचायकस्य नग्नजिन्नामकेन वास्तुविद्याचार्येण कृतस्य 'चित्रलक्षणम्' इति प्राचीनस्य ग्रन्थस्य तिब्बतभाषामयोऽनुवाद एवोपलभ्यते । तस्यानुवादस्याप्यनुवादः जार्मण्यभाषायां प्रकाशितश्चर । मानसारेत्याख्ये शिल्पशास्त्रीये ग्रन्थे चित्रपदेन पूर्णमूर्ति, अर्धचित्रपदेनार्ध-मूर्तिः, चित्राभासपदेन चाऽऽलेख्यमिति व्याकृतम् आनन्द-के-कुमारस्वामिना । यद्यपि विष्णु-धर्मोत्तरपुराणीयचित्रसूत्रस्याधारेण गीतं वाद्यं नृत्तं चित्रं मूर्तिश्चेत्यानुपूर्व्येण प्रवर्तन्ते, तथापीह 'सहकाररसं गृह्य उर्वशीं चक्रे वरस्त्रियम् । चित्रेण सा ततो जाता रूपयुक्ता वराप्सराः' इत्यारभमाणेनापि ग्रन्थकृता ग्रन्थभागे मूर्तिनिर्माणप्रक्रियैव वर्णिता । डॉ० अशोकशास्त्रिणा संपादितेनानेन चित्रसूत्रेण विद्वज्जना नूनं प्रीणिताः, छात्रजना जिज्ञासुजनाश्च ध्रुवमुपकृता इति विश्वसिति ।

मातृकानवम्याम्<br>२००८ वैक्रमाब्दे<br>वाराणस्याम्

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'<br>अनुसन्धानसंस्थानसंचालकः<br>वाराणसेयसंस्कृतविश्वविद्यालये

# मुखबन्धः

महापुराणानि यथा हिन्दुसामाजिकजीवनस्याधाररूपेण समादृतानि तथा उपपुराणानामपि आदर चिरन्तनै क्रियते स्म । किन्तु महदिद दौर्भाग्यस्य स्थानं यदपूर्वतममिदं वस्त्वपि पाश्चात्यैस्तथास्मद्देशीयैरपि विद्वत्कुलमूर्धन्यै. सावज्ञ परिहीयत इति । प्राचीनभारतगौरवस्य विशदीकरणे, अनन्यसाधारण्या संस्कृते. दृढीकरणे, ऐतिहासिकतत्त्वाना नवीनीकरणे तथा धर्मकर्मध्यानधारणादीना विचारधाराणा यथायथ निर्धारणे एषा महानुपयोग इति निर्विचिकित्स वक्तु शक्यते ।

विष्णुधर्मोत्तरोपपुराणमिदमतिमहत् । इदश्च पण्डिताना मतानुसारेण ईसवीये एकादशशतकाभ्यन्तरे विरचितम् । त्रिखण्डात्मकस्यास्य चित्रसूत्रमतिवैशिष्ट्यमावहति । तृतीयखण्डस्य पञ्चत्रिंशाध्यायादारभ्य एकोनचत्वारिंशदध्यायपर्यन्तमस्य विस्तर । प्राचीनभारतीयप्रतिमालक्षणारम्भस्यास्य विशुद्धपाठनिर्णय सुकठिन एव । नक्तन्दिव परिश्रम्य मातृका निरीक्ष्य तथा प्रमादभूयिष्ठान् मुद्रितान् ग्रन्थपाठाश्च सम्यगालोच्य साम्प्रतमनुसन्दधानाना दृष्टिपथमानीयते । विष्णुधर्मोत्तरस्य एकाधिका हस्तलिखितपुस्तिका भिन्नभिन्नस्थानेषु उपलभ्यन्ते । वाराणसेयसंस्कृतविश्वविद्यालयेऽस्य विष्णुधर्मोत्तरस्य द्वे हस्तलिखितपुस्तिके वर्तेते, तथा पूनानगर्यां पुस्तिकाद्वयस्योपलब्धिर्भवति । एव 'बम्बे' इत्याख्ये नगरे एका पुस्तिका अस्ति । एता सर्वा अवलम्ब्य तथा वेङ्कटेश्वरसस्करण वडोदासंस्करण च सर्वथालोच्य ग्रन्थोऽय प्रस्तूयते । पादटीकाया च + चिह्नमतिरिक्तपाठबोधक तथा × चिह्न तत्तत्पुस्तके अशोऽय नास्तीति सूचयति । 'वे' इत्यनेन वेङ्कटेश्वरसंस्करण 'ब' इत्यनेन च वडोदासंस्करण सूच्यते ।

ग्रन्थस्यास्यातिवैशिष्ट्याद् दुरूहत्वाच्च अर्थबोधे पदे पदे महानन्तराय साधारणपाठकानामनुसन्दधता विद्यार्थिना विद्यावर्गिना

पण्डितानां च वैमनस्यमुपस्थापयतीति एतदर्थम् अन्ते अस्य कश्चित् हिन्दीभाषया अनुवादोऽपि सन्निवेशित.। तथा ग्रन्थोद्धृतानां केषाञ्चन पदविशेषाणां विशदीकरणाय मूर्तिमानप्रसङ्गस्य परिष्करणार्थं कतिपय-भङ्गयादीनाम् अवबोधनाय (यथा वैशाखपदम्, आलीढपदं, प्रत्यालीढपदं, वितालस्थानं, ताल., अङ्गुलि., मूर्धाविस्तार., करतलपरिमाणं, हस-पुरुष., ऋज्वागतं स्थानं, पार्श्वागतं स्थानम्) च चित्रादिकं प्रदत्तम्। नूनम् एतेन अतिसूक्ष्मविषयस्यापि अनायासेनैव बोध. स्यादिति सम्भावयामि। मुख्यपृष्ठस्थसूर्यचित्रं भारतीयसंग्रहालयाधिकारिण. समुपलब्धम्।

अवसरेऽस्मिन् विश्वविद्यालयप्रकाशनसमिते. सदस्या विशेषतः श्रीमन्त उपकुलपतयो बलरामोपाध्यायास्तथा अनुसन्धानसञ्चालकाश्च धन्यवादार्हा। एतेषामाग्रहातिशयेनैव ग्रन्थोऽयं प्राकाश्यं नीतः।

हिन्दीभाषान्तरीकरणे श्रीकपिलदेवत्रिपाठी तथा श्रीराजेन्द्रपाण्डेयश्च यथायथं साहाय्यं कृतवन्तौ। चित्रादिसंग्रहविषये श्रीमदिन्दिराचरण-पाण्डेय, श्रीदेवनारायणमिश्रस्तथा श्रीप्रबोधनारायणोऽवस्थी च कृत-यत्ना आसन्निति एभ्यः कृतज्ञतामाविष्करोमि।

ममान्तेवासी डा० रामाभिलाषत्रिपाठी तथा अनुसन्धानच्छात्रः श्रीजगदीशप्रसादशुक्लश्च लेखनप्रसङ्गे प्रयासमाश्रितवन्तौ।

विश्वविद्यालयमुद्रणालयाध्यक्षस्तथास्यावरकर्मचारी च यथायं स्वल्पेनैव कालेन मुद्रितः स्यात् तथा दृष्टिं दत्तवन्तौ।

अस्मिन् ग्रन्थे यदि काश्चन त्रुटय सञ्जाता. स्यु मम तर्हि दृष्टिदोष एव तत्र कारणं भवेदिति ता अविगणय्य मामनुगृह्णीयुर्विद्वांस इति सप्रश्रयं प्रार्थये।

वाराणसी
कार्तिकपूर्णिमा
२-११-१९७१

अशोकशास्त्री
पुराणेतिहासविभागाध्यक्षः
वाराणसेयसंस्कृतविश्वविद्यालयस्य

# विष्णुधर्मोत्तरपुराणम्

[ चित्रसूत्रम् ]

## प्राक्कथनम्

अष्टादशमहापुराणवदुपपुराणानामपि प्रामाण्यं प्राचीनत्वं चाकामेनापि स्वीकर्तव्यम्। सर्वेष्वेव महापुराणेष्वेषाम् उल्लेखः परिचयः प्रसङ्गश्च उपलभ्यते। किन्तु यद्यपि इमानि, महापुराणानि इव सम्मानमर्हन्ति, तथापि महापुराणप्रभावातिशयात् न तादृशो दृष्टिमाक्रष्टुं शेकुः। भारतीये जनसमाजे च पुराणपदेन महापुराणस्यैव स्वीकाराद् उपपुराणानां नैतादृश आदरः। यद्यपि महापुराणमतानुसारेण उपपुराणानि तेषामुपभेदा एव, न स्वातन्त्र्यमर्हन्ति; किन्तु वस्तुस्थितिर्न तथा। स्वतन्त्ररूपेणैषां स्थितिः सर्वैरेव स्वीक्रियते। बहुनिबन्धकारैः एभ्यो विभिन्नानामंशानां नाम्ना उद्धृतिः, पृथिव्या बहुषु स्थानेषु मातृका-

१. मत्स्यपुराण ५३।५९ क, ६३
उपभेदान् प्रवक्ष्यामि लोके ये सम्प्रतिष्ठिताः।
... ... ...... ... ...

अष्टादशभ्यस्तु पृथक् पुराणं यत्प्रदिश्यते।
विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम्॥

स्कन्दपुराण ७।१ २।७९, ८३
उपभेदान् प्रवक्ष्यामि लोके ये सम्प्रतिष्ठिताः।
... ... .. . .. ...... ..

अष्टादशभ्यस्तु पृथक् पुराणं यच्च दृश्यते।
विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम्॥

मग्नानाम् एषां स्वातन्त्र्येणावस्थानमित्यादिभिः उपपुराणानि महत्त्वं प्रमाणपदवीं च भजन्ते ।

महापुराणानां संख्याविषये नामविषये च प्रायशः सर्वेषामेवैकमत्यमस्ति; किन्तु न तथा उपपुराणविषये । यद्यपि कूर्मस्कन्दपद्मगरुडब्रह्मवैवर्तादिमहापुराणेषु अन्येषु निबन्धेषु च महापुराणवदुपपुराणसंख्या अष्टादश एव स्वीकृता, तथापि—

"अन्याश्च संहिताः सर्वा मारीचकापिलादयः ।
सर्वत्र धर्मकथने तुल्यसामर्थ्यमुच्यते ॥"

इत्याद्युक्तिभिः अष्टादशातिरिक्तानां विशिष्टानाम् उपपुराणानां प्रामाण्यमपि अभ्युपगम्यते । अथ उपपुराणानां नामानि सर्वत्र भिन्नरूपाणि । वस्तुतस्तु तान्यसंख्यानि इत्येव मन्तव्यम् ।

शैवब्राह्मशाक्तवैष्णवेत्यादिभिर्यथा महापुराणानि भिद्यन्ते तथा उपपुराणानामपि अयं भेदः सम्भवति । वैष्णवान्युपपुराणानि यथा—विष्णुधर्मम्, विष्णुधर्मोत्तरपुराणम्, नरसिंहपुराणम्, क्रियायोगसारपुराणम्, कल्किपुराणम्, आदिपुराणम् इत्यादीनि । सौराणि उपपुराणानि यथा—साम्बपुराणम्, सूर्यपुराणम्, सौरधर्मपुराणम्, सौरधर्मोत्तरपुराणमित्यादीनि । शाक्तोपपुराणानि यथा—देवीपुराणम्, कालिकापुराणम्, महाभागवतम्, देवीभागवतम्, नन्दापुराणम्, सारदापुराणम्, बृहन्नन्दिकेश्वरपुराणम् इत्यादीनि ।

एषां मध्ये विष्णुधर्मोत्तरपुराणमतिमहद् वैष्णवोपपुराणम् । खण्डत्रयात्मकेऽस्य बहुविधानि वैचित्र्यपूर्णानि आलोचनानि प्राचीनभारतस्य संस्कृतिं विशदयन्ति, गौरवं प्रदर्शयन्ति, इतः पूर्वमनालोचितानि वस्तूनि आलोचयन्ति च ।

विष्णुधर्मोत्तरपुराणस्य रचनाकालमवलम्ब्य पण्डितेषु बहुविवादः प्रचलति। डा० बयुलारमतेन अयं ग्रन्थः ईशवीयपञ्चशतोत्तरकाले एव सृष्टः[1]। विण्टरनित्समतानुसारेण पुराणमिदं ६२८ आरभ्य १००० ईशवीयशतकाभ्यन्तरे विरचितम्[2]। स्टेला क्रैमरिश[3] तथा आर. सी. हाजरा[4] ईशवीयपञ्चशतवर्षाभ्यन्तर एव अस्य विरचनं समाप्तिमगात् इति मन्येते।

अस्य प्रथमखण्डे भूगोलवर्णनं, पातालवर्णनं, भार्गवरामचरित्रं, मन्वन्तरादीनि, तिथिमुहूर्तसम्बन्धीनि ज्योतिश्शास्त्रविषयकाणि, सृष्टिक्रमः, उर्वशीपुरुरवसोः संवादः, श्राद्धं, व्रतमाहात्म्यं, दीपदानविधिः, विष्णुपूजा, यक्षरक्षःपिशाचादीनां प्रादुर्भावः, भरतमाहात्म्यमित्यादयो विषया एकोनसप्तत्युत्तरेषु द्विशताध्यायेषु विस्तृत्य समुपलभ्यन्ते। द्वितीयखण्डस्तु त्र्यशीत्युत्तरशताध्यायात्मको मुख्यतया राजधर्मविषयकः। तत्र राजधर्माणामानुपूर्व्यालोचनावसरे तीर्थप्रशंसा, स्त्रीचरित्रं, व्रतादीनि, पुरुषकारप्रशंसा, चतुर्वर्णचतुराश्रमव्यवस्था, विष्णुपूजा, कर्मविपाकाः, गायत्रीमाहात्म्यं, ज्योतिर्विद्या, धनुर्वेद इत्यादीनि आलोचितानि। विशालतमः विष्णुधर्मोत्तरस्य तृतीयखण्डः पञ्चाशदुत्तरत्रिशताध्यायात्मकः। अत्रोपलब्धानां विषयाणां बहुवैचित्र्यम् अनुसन्धानसञ्चालकानां प्राचीनभारतीयैतिह्यविदां दृष्टिमाकर्षति। गायत्र्यादीनि वृत्तानि, संस्कृतप्राकृतभाषाव्याख्यानम्, अलङ्काराः, इतिहासाः, काव्यं, नाट्यसूत्रं, गीतलक्षणम्, आतोद्यं, नृत्तस्थापनं, नवरसाः, नृत्यमुद्राः, चित्रसूत्रं, विभिन्नदेवप्रतिमानिर्माणं, मन्दिरस्थापनं, मूर्तिप्रतिष्ठा, व्रतमाहात्म्यं, सप्तदशोत्तरशताध्यायात्मिका हंसगीता, (अत्र हंसरूपी विष्णुः ऋषिभ्यो बहुविधान् विषयान् श्रावयामास) विष्णुमाहात्म्यप्रतिपादकानि आख्यानानि इत्यादिविषयान् गृहीत्वा खण्डोऽयं प्रवर्तते।

---

१. इण्डियन एण्टिक्वेरी, वाल्यूम १९, १८९० पृ. ४०८
२. हिस्ट्री ऑफ इण्डियन लिट्रेचर, १, पृ. ५८०
३. जर्नल ऑफ दी डिपार्टमेण्ट ऑफ लेटर्स, वाल्यूम ११, पृ. २
४. स्टडीज इन दि उपपुराणज्, वाल्यूम १, पृ. २१२

तृतीयखण्डस्य पञ्चत्रिंशाध्यायादारभ्य ऊनचत्वारिंशाध्यायपर्यन्तं चित्रसूत्रस्य मुख्यतया विस्तरः। (अत्र केषुचनाध्यायेषु चित्रसम्बन्धिनी काचिदालोचना वर्तते।) एष्वेवाध्यायेषु चित्रकलाया समग्रं वर्णनमुपलभ्यते। विष्णुधर्मोत्तरे इत पूर्वं चित्रसम्बन्धिव्याख्यानं नास्ति। सुप्राचीनाया भारतीयचित्रकलाया बहुषु पुराणेषु विशेषतः मत्स्याग्निवायुस्कन्दगरुडब्रह्माण्डभविष्यनारदीयमहापुराणेषु पर्याप्ता चर्चा उपलभ्यते। किन्तु इमानि सर्वाणि पुराणान्यपि चित्रकलालोचनाया विष्णुधर्मोत्तरपुराणापेक्षया अकिञ्चित्कराणीति वक्तुमुचितम्।

प्रसङ्गतोऽत्र प्रश्नकर्त्रा वज्रेण (श्रीकृष्णपौत्रस्य अनिरुद्धस्य पुत्र वज्र) उपस्थापिता देवतारूपनिर्माणसम्बन्धिनी विचिकित्सा महर्षि मार्कण्डेय निराकरोति। तत्र इमाः मार्कण्डेयस्योक्तय द्रष्टव्या —

"चित्रसूत्रं न जानाति यस्तु सम्यग् नराधिप।
प्रतिमालक्षणं वेत्तुं नाशक्य तेन कर्हिचित्॥

विना तु नृत्तशास्त्रेण चित्रसूत्रं सुदुर्विदम्।
जगतोऽनु क्रिया कार्या द्वयोरपि यतो नृप॥

आतोद्यं यो न जानाति तस्य नृत्तं सुदुर्विदम्।
आतोद्येन विना नृत्तं विद्यते न कथञ्चन॥

न गीतेन विना शक्यं ज्ञातुमातोद्यमच्युत।
गीतशास्त्रविधानज्ञः सर्वं वेत्ति यथाविधि॥

संस्कृतं प्राकृतं चैव गीतं द्विविधमुच्यते।
अपभ्रष्टं तृतीयं तु तदनन्तं नराधिप॥

देशभाषाविशेषेण तस्यान्तो नेह विद्यते।
गीतं पाठवशाद् ज्ञेयं स च पाठो द्विधा मतः॥
गद्यं पद्यं च धर्मज्ञ गद्य संकथया स्मृतम्।
पद्यं छन्दोविशेषेण छन्दश्च बहुधा भवेत्"

अस्य अयमेव निष्कर्षः देवतारूपनिर्माणेन सह चित्रस्य, नृत्तसूत्रस्य, आतोद्यस्य, गीतस्य, देशभाषायाश्च अविच्छेद्य सम्बन्धः।

चित्रसूत्रस्य पञ्चत्रिंशोऽध्याये आयामोच्छ्रायो वर्ण्यते। तत्र नारायणाभिधेयो मुनिः समागताना देवरमणीना वञ्चनार्थम् आम्रवृक्षस्य रस गृहीत्वा भूमौ काञ्चन अभिनन्द्यकान्ति दिव्या स्त्रीमूर्तिमङ्कितवान्। अस्मादेव चित्रात् ऊर्वशी समजनि। अस्या दिव्य रूप विलोक्य सर्वा अप्सरस. व्रीडामापन्ना. तत्स्थान परित्यजु.। इत्थं स नारायणो मुनि. सुलक्षण चित्रं निर्माय अच्युत विश्वकर्माणमध्यापयामास।

अस्मिन् चित्रसृष्ट्युपाख्याने एकाधिकं वैशिष्ट्य वर्तते। प्रथमत भारतस्य चतुःषष्टिकलासु प्रायशः सर्वा एव कला यथा प्राचीनै ऋषिभिः सह सबद्धा सश्लिष्टाश्च (यथा भरतस्य नाट्यशास्त्रम्), तथा इमा चित्रविद्याम् अपि नारायणाख्यो मुनि प्रवर्तितवान्। द्वितीयत. स मुनिः इमा विद्या वास्तुविद्याप्रवर्तकं विश्वकर्माख्य देवमध्यापयामास। एतेन वास्तुविद्यया सह अस्य चित्रकर्मण सुसस्पृष्ट. सम्बन्ध. सूचितो भवति।

चित्रसूत्रं विवृण्वता मुनिना अत्र नृत्तेन सह अस्य कश्चन घनिष्ठः सम्बन्धोऽपि प्रतिष्ठापित इति प्रागेवोक्तम्। यथा नृत्तेन तथा चित्रेणापि त्रैलोक्यस्य सामान्यसत्ता अनुक्रियते। अत नृत्ते याश्च दृष्टयो भावाभिव्यक्तयश्च येषा च अङ्गोपाङ्गानामलङ्काराणा च मुद्रा-स्थितिर्गतिश्च उपलभ्यन्ते ताः सर्वा यथायथ चित्रेऽपि उपनिबद्धा.। किन्तु एतेन नेद प्रतिभाति यत् नृत्तचित्रयो. सर्वात्मना अभिन्नत्वम्। विष्णुधर्मोत्तरस्य नृत्ताध्यायेषु आयामोच्छ्रायादीनि प्रमाणानि नोक्तानि, तानीमानि चित्रवैशिष्ट्यघटकी-

तृतीयखण्डस्य पञ्चत्रिंशाध्यायादारभ्य ऊनचत्वारिंशाध्यायपर्यन्तं चित्रसूत्रस्य मुख्यतया विस्तरः। ( अत्र केषुचनाध्यायेषु चित्रसम्बन्धिनी काचिदालोचना वर्तते। ) एष्वेवाध्यायेषु चित्रकलायाः समग्रं वर्णनमुपलभ्यते। विष्णुधर्मोत्तरे इतः पूर्वं चित्रसम्बन्धिव्याख्यानं नास्ति। सुप्राचीनाया भारतीयचित्रकलायाः बहुषु पुराणेषु विशेषतः मत्स्याग्निवायुस्कन्दगरुडब्रह्माण्डभविष्यनारदीयमहापुराणेषु पर्याप्ता चर्चा उपलभ्यते। किन्तु इमानि सर्वाणि पुराणान्यपि चित्रकलालोचनाया विष्णुधर्मोत्तरपुराणापेक्षया अकिञ्चित्कराणीति वक्तुमुचितम्।

प्रसङ्गतोऽत्र प्रश्नकर्त्रा वज्रेण ( श्रीकृष्णपौत्रस्य अनिरुद्धस्य पुत्र. वज्र. ) उपस्थापिता देवतारूपनिर्माणसम्बन्धिनी विचिकित्सा महर्षिः मार्कण्डेय निराकरोति। तत्र इमाः मार्कण्डेयस्योक्तयः द्रष्टव्या —

"चित्रसूत्रं न जानाति यस्तु सम्यग् नराधिप।
प्रतिमालक्षणं वेत्तुं नाशक्यं तेन कर्हिचित्॥
... ...
विना तु नृत्तशास्त्रेण चित्रसूत्रं सुदुर्विदम्।
जगतोऽनु क्रिया कार्या द्वयोरपि यतो नृप॥
... ... ... ...
आतोद्यं यो न जानाति तस्य नृत्तं सुदुर्विदम्।
आतोद्येन विना नृत्तं विद्यते न कथञ्चन॥
... ... ... ... ...
न गीतेन विना शक्यं ज्ञातुमातोद्यमच्युत।
गीतशास्त्रविधानज्ञः सर्वं वेत्ति यथाविधि॥
... ...
संस्कृतं प्राकृतं चैव गीतं द्विविधमुच्यते।
अपभ्रष्टं तृतीयं तु तदनन्तं नराधिप॥
... ... ... ... ... ... ...

देशभाषाविशेषेण तस्यान्तो नेह विद्यते।
गीत पाठवशाद् ज्ञेयं स च पाठो द्विधा मतः॥
गद्यं पद्य च धर्मज्ञ गद्य संकथया स्मृतम्।
पद्यं छन्दोविशेषेण छन्दश्च बहुधा भवेत्"

अस्य अयमेव निष्कर्षं देवतारूपनिर्माणेन सह चित्रस्य, नृत्तसूत्रस्य, आतोद्यस्य, गीतस्य, देशभाषायाश्च अविच्छेद्य सम्बन्ध.।

चित्रसूत्रस्य पञ्चत्रिंशेऽध्याये आयामोच्छ्रायो वर्ण्यते। तत्र नारायणाभिधेयो मुनि समागताना देवरमणीना वञ्चनार्थम् आम्रवृक्षस्य रस गृहीत्वा भूमौ काञ्चन अभिनन्द्यकान्ति दिव्या स्त्रीमूर्तिमङ्कितवान्। अस्मादेव चित्रात् ऊर्वशी समजनि। अस्या दिव्य रूप विलोक्य सर्वा अप्सरस व्रीडामापन्ना तत्स्थान परित्यजु। इत्थ स नारायणो मुनि सुलक्षण चित्रं निर्माय अच्युत विश्वकर्माणमध्यापयामास।

अस्मिन् चित्रसृष्टयुपाख्याने एकाधिकं वैशिष्ट्य वर्तते। प्रथमत भारतस्य चतु.षष्टिकलासु प्रायशः सर्वा एव कला यथा प्राचीनै ऋषिभिः सह सबद्धा सश्लिष्टाश्च (यथा भरतस्य नाट्यशास्त्रम्), तथा इमा चित्रविद्याम् अपि नारायणाख्यो मुनि प्रवर्तितवान्। द्वितीयत स मुनि इमा विद्या वास्तुविद्याप्रवर्तक विश्वकर्माख्य देवमध्यापयामास। एतेन वास्तुविद्यया सह अस्य चित्रकर्मण सुसस्पृष्ट सम्बन्ध सूचितो भवति।

चित्रसूत्र विवृण्वता मुनिना अत्र नृत्तेन सह अस्य कश्चन घनिष्ट सम्बन्धोऽपि प्रतिष्ठापित इति प्रागेवोक्तम्। यथा नृत्तेन तथा चित्रेणापि त्रैलोक्यस्य सामान्यसत्ता अनुक्रियते। अत नृत्ते याश्च दृष्टयो भावाभिव्यक्तयश्च येषा च अङ्गोपाङ्गानामलङ्काराणा च मुद्रा स्थितिर्गतिश्च उपलभ्यन्ते ता सर्वा यथायथ चित्रेऽपि उपनिबद्धा.। किन्तु एतेन नेद प्रतिभाति यत् नृत्तचित्रयो सर्वात्मना अभिन्नत्वम्। विष्णुधर्मोत्तरस्य नृत्ताध्यायेषु आयामोच्छ्रायादीनि प्रमाणानि नोक्तानि, तानीमानि चित्रवैशिष्ट्यघटकी-

भूतानि पदानि एवात्र चित्रसूत्रे विश्लिष्य प्रतिपाद्यन्ते। यथा ताललयादीनामेकमत्येन एव नृत्तस्य गीतेश्चोत्कर्षस्तथा च सुसंस्थितायामद्वारा मुनिर्दिष्टोच्छ्रायमाध्यमेन च चित्राणां सौकर्यं विधीयते। शरीरस्याङ्गप्रत्यङ्गादीनां परिमाणवर्णनप्रसङ्गेन प्रथमतः पुरुषशरीराणां पञ्चधा भेदः समुल्लिखितः। हंसः, भद्रः, मालव्यः, रुचकः, तथा च शशकः। एतेषामुच्चता प्रस्थानुसारेण तुल्या स्यात्। अर्थात् दक्षिणबाहौ दक्षिणपार्श्वे प्रसारिते अथ वामबाहौ वामपार्श्वे प्रसारिते सति दक्षिणहस्तस्य मध्याङ्गुलेरारभ्य वामहस्तस्य मध्याङ्गुलपर्यन्तं यत् मानं स्यात् तदेव सम्पूर्णोच्छ्रायस्य परिमाणं भवेत्। तदिदमुक्तम्—

"उच्छ्रायायामतुल्यास्ते सर्वे ज्ञेया प्रमाणतः" इति।

एषां पञ्चविधानां परिमाणमङ्गुलमानेन प्रदत्तम्। यथा—हंसा अष्टोत्तरशताङ्गुलपरिमिताः। भद्राः षडुत्तरपरिमेयाः। मालव्याः चतुरधिकशताङ्गुलपरिमेयाः। रुचकाः शताङ्गुलपरिमेयाः। शशकाश्च दशोनशताङ्गुलपरिमेयाः। स्वेन एव अङ्गुलमानेन इमे सर्वे परिमापयितव्याः। द्वादशाङ्गुलिभिरेकस्तालो भवति। प्रसङ्गेऽस्मिन् अङ्गुलिपरिमाणस्य सुस्पष्टोऽर्थो विश्लेषणीयः, येन तालमानस्यापि बोधो जायेत।

सुप्राचीनकालात् मूर्तीनाम् उच्चतानिरूपणविषये अङ्गुलिः यद्वा ताल एव मानत्वेन प्रचलति। ऋग्वेदीयपुरुषसूक्ते[1] पुरुषः समग्रं विश्वं व्याप्य स्थितः, अपि तु दशाङ्गुलेनास्याधिक्यमासीद् विश्वापेक्षया इति प्रसिद्धम्। शतपथब्राह्मणेऽपि (१०।२।१।२) प्रजापतिर्यज्ञवेदिं पञ्चाङ्गुलमानेन परिमापितवान् इत्येतल्लिखितं वर्तते। शुल्वसूत्रेषु च वेदिनिर्माणप्रसङ्गे अङ्गुलिरेव मानत्वेन गृहीतः इत्यादीनामुल्लेखः प्रसिद्धः। वस्तुतस्तु मानाङ्गुलमात्राङ्गुलदेहलब्धाङ्गुलभेदात् अङ्गुलमानस्य त्रैविध्यमुपलभ्यते। तत्र तु मानाङ्गुलस्य स्वरूपं बृहत्संहितायाम् इत्थं निरूपितम्—

१. स भूमिं विश्वतो वृत्वा अत्यतिष्ठद् दशाङ्गुलम्

ऋग्वेद, १०।९०

"जालान्तरगे भानौ यदणुतरं दर्शनं रजो याति ।
तद् विद्यात् परमाणुं प्रथमं तद्धि प्रमाणानाम् ॥
परमाणुरजोबालाग्रलिक्षायूकं यवोऽङ्गुलं चेति ।
अष्टगुणानि यथोत्तरमङ्गुलमेकं भवति संख्या ॥"

किन्तु प्राचीनभारतीयप्रतिमामानलक्षणग्रन्थेषु ईदृशस्याङ्गुलपरिमाणस्य न तथोपयोगिता वर्तते, यथा अपरेषाम् अङ्गुलमानानाम् । वस्तुतस्तु अष्टयवाना यत् स्थूलत्वं तत्तु अङ्गुलमानत्वेन यत् परिचित तदपेक्षयात्यन्तमेव महत् । मानाङ्गुलमानं तु सापेक्षमेव । प्रतिमानिर्मातु प्रतिमानिर्मापयितुर्वा हस्तद्वयेषु परस्परभिन्नदिशि प्रसारितेषु सत्सु दक्षिणहस्तस्य मध्यमाङ्गुलाग्रभागात् आरभ्य वामहस्तमध्यमाङ्गुलाग्रभागपर्यन्तं स्थानमेव अङ्गुलमाननिर्धारणस्य मूलमासीत् । मानाङ्गुलस्य व्याख्यानान्तरमपि शुक्रनीतिसारे प्रतिपादितम् । तद्यथा—

"पल्लवाना चतुर्भागा मापनाङ्गुलिका स्मृता ।"

अत्र पल्लवपदेन नूनं हस्तमुष्टि अथवा करतलस्थान बोद्धव्यम् ( कालिदासस्य रघुवशम्—"लतेव सनद्धमनोज्ञपल्लवा–३।७ ) ।

अस्माकं मते भारतवर्षस्य प्राचीनयुगे अथवा मध्ययुगे प्रतिमाना मानलक्षणे देहलब्धाङ्गुलमानमेव सर्वापेक्षया प्रसिद्धम् । बृहत्संहितायां प्रतिमाया दैर्घ्यप्रस्थस्य परिमाणवर्णनप्रसङ्गे उक्तं वर्तते—

"स्वैरङ्गुलप्रमाणैर्द्वादशविस्तीर्णमायतं च मुखम्"[1] इति ।

भट्टोत्पलस्तस्य टीकायाम् अत्र स्थित स्वपदम् इत्थं व्याख्याति—"यस्मात् काष्ठात् पाषाणादिकाद् वा प्रतिमा क्रियते तद् दैर्घ्यं पीठप्रमाणविवर्जितं द्वादशभागविवर्जितं कृत्वा तत्रैको भागो नवधा कार्यः सा अङ्गुलसंज्ञा भवति। यस्मादष्टाधिकमङ्गुलशतं प्रतिमाप्रमाणं वक्ष्यति स्वैरङ्गुलप्रमाणैरिति

१. बृहत्संहिता ५७ १ २

प्रतिमाया स्वैरात्मीयैरङ्गुलप्रमाणे मुखं वदनं द्वादशाङ्गुलानि विस्तीर्णं विपुलमायतं च दीर्घं कार्यम्" । अर्थात् यस्य पीठस्योपरि प्रतिमाया पाददेशात् मस्तकपर्यन्तं यत् मानं तस्य अष्टोत्तरशततमभागस्तु एक अङ्गुलः भवेत् । हयशीर्षपञ्चरात्रेऽपि अस्य स्पष्टतया उल्लेखो दृश्यते—

"अभिप्रेतप्रमाणं तु नवधा प्रविभाजयेत् ।
नवमे भास्करैर्भक्तेर्भावः स्वाङ्गुलमुच्यते ॥"

तथा च नारदपुराणेऽप्युक्तम्—

"बिम्बमानं तु नवधा प्रोच्छ्रायात् संविभाज्य वै ।
भागं भागं ततो भूयो भवेद् द्वादशधा द्विज ॥
तदङ्गुलं स्याद् बिम्बस्येति ।"

सर्वत्रैव प्रतिमाया अष्टोत्तरशततमभाग प्रति सर्वेषां दृष्टिराकृष्यते । वैखानसागमेऽपि ( द्वाविंशतितमेऽध्याये ) देहलब्धाङ्गुलस्य सुस्पष्ट लक्षणमित्थ वर्तते—"बेरोत्सेधं तत्कालवशेन विभाज्यैकांशदेहलब्धाङ्गुलं तदष्टांशं यवमिति ।" वैखानसागमे प्रतिमामानलक्षणस्य अयं क्रम प्रदत्त । एकाङ्गुलेन एका मूर्ति ( इन्दु, विश्वम्भर, मोक्ष, उक्त. ), द्व्यङ्गुलेन एका कला ( गोलक, अश्विनी, युग्म, ब्राह्मण., विहग, अक्षि, पक्ष ), त्र्यङ्गुलेन एक अग्निः ( रुद्राक्षि, गुणः, अर्ण, काल, शूल., राम, वर्ग., मध्य.), चतुरङ्गुलेन एक भेद ( प्रतिष्ठा, जाति, कर, अब्जानन, युग, तूर्यं, तुरीयम् ), पञ्चाङ्गुलेन एको विषय. ( इन्द्रिय., भूत, इषु, सुप्रतिष्ठ., पृथिवी ), षडङ्गुलेन एकं कर्म ( अङ्ग, रस, समयः, गायत्री, कृत्तिका, कुमारानन, कौशिक, ऋतु ), सप्ताङ्गुलेन एक. पाताल. ( मुनि, धातु, लोकः, उष्णिक, रोहिणी, द्वीपः, अङ्गम्, अम्भोनिधि ), अष्टाङ्गुलेन एक. लोकपाल. ( नाग, उरग, वसु., अनुष्टुप्, गण. ), नवाङ्गुलेन एका

नाडी, पङ्क्तिः), एकादशाङ्गुलेन एक रुद्र (त्रिष्टुप्), द्वादशाङ्गुलेन एकः तालः (वितस्ति., मुख, यम, अर्कः) इत्यादीनि रूपाणि प्रवर्तन्ते। प्रतिमानिर्मातु. निर्मापयितुर्वा दक्षिणहस्तस्य मध्यमाङ्गुलस्य मध्यमपर्वणामपि अङ्गुलमानं कदाचित् सूच्यते, तत्तु मात्राङ्गुलान्त पातीति मन्यामहे।

तालप्रसङ्गे तु इदमधिकमुच्यते यत् वैखानसागमे तालसम्बन्धिमान यदुक्त (द्वादशाङ्गुलिभिरेकस्तालो भवति) तत्तु प्रतिमामानलक्षणग्रन्थैरपि समर्थ्यते। तत्रोक्त "द्वादशाङ्गुलितालं च वितस्तिर्मुखमेव च"। मत्स्यपुराणेऽपि तत्सजातीया उक्तिर्वर्तते—

"स्वकीयाङ्गुलिमानेन मुखं स्याद् द्वादशाङ्गुलम्।"

किन्तु अत्र एक विषय प्रति अनुसन्धानसञ्चालकाना दृष्टिराकृष्यते। प्रतिमामानलक्षणसम्बन्धेषु प्राचीनग्रन्थेषु वराहमिहिरकृताया बृहत्संहिताया भट्टोत्पलकृतेषु अस्य टीकाग्रन्थेषु च तथा सम्यक्सम्बुद्धभाषित-प्रतिमालक्षणे च प्राचीनमानत्वेन ताल इत्यस्य उल्लेखो न दृश्यते। अथ सर्वेष्वेव ग्रन्थेषु अङ्गुलमानस्य स्वीकृतिरस्ति। यद् भवतु नाम, प्रतिमाया मानलक्षणपक्षे यथा अङ्गुलादीना ज्ञानमावश्यक तथा तालमानज्ञानमपि अपेक्षते एव।

विष्णुधर्मोत्तरपुराणेऽपि हसादीना पञ्चपुरुषाणा यत् मान प्रदत्तं सर्वत्र एव तत्तु अङ्गुलानुसारेण अथवा तालानुसारेण। ग्रन्थमिममधिकृत्य हसस्य निम्नोक्त मान प्रतीयते। गुल्फपर्यन्त पादस्य उच्चता तालस्य चतुर्भागात्मिका अर्थात् अङ्गुलत्रयम्। द्वे जङ्घे तु तालद्वयविशिष्टे अर्थात् एकस्या जङ्घाया उच्चता द्वादशाङ्गुलि.। जानुनी च पादवदेव स्याताम् अर्थात् दैर्घ्येण अङ्गुलत्रयम्। ऊरुद्वय जङ्घावत्। लिङ्गादारभ्य नाभिस्थानपर्यन्तमेकतालविशिष्ट स्यात् तथा च नाभिस्थलात् हृदयपर्यन्तमपि एकतालात्मकम्, एव च हृदयात् कण्ठपर्यन्तमपि स्थान दैर्घ्येण

एकतालात्मक भवति। कण्ठश्च एकस्य तालस्य त्रिभागं स्थानं व्याप्य ( चतुरङ्गुल ) वर्तते। वदनस्य दैर्घ्यं तु एकताल भवति। ललाटस्योपरि मस्तक तालषड्भागयुक्त ( अङ्गुलद्वयात्मकं ) स्यात्। मस्तकादारभ्य पादपर्यन्त यत् सम्पूर्णं स्थान तस्य मध्यभागे लिङ्ग स्यात्। इय नाम प्रतिमाया दीर्घता। कर. एकतालात्मक, बाहु. सप्तदशाङ्गुल स्यात्, प्रबाहुश्चापि सप्तदशाङ्गुल.। इदमेव हंसस्य प्रस्थानुसारेण मानम्। अवशिष्टाना चतुर्णा भद्रमालव्यरुचकशशकादीना एतदनुसारेण मान कल्पनीयम्। सर्वे एव दैर्घ्ये विस्तारे परिधौ च समानमाना स्यु।

षट्त्रिंशेऽध्याये प्रतिमान्तर्गताना मानं विचारितम्। मूर्ध्नोर्विस्तार' द्वादशाङ्गुल, ललाटस्य दैर्घ्यमष्टाङ्गुलि., उच्चता च चतुरङ्गुलि., कपोलौ च दैर्घ्येण चतुरङ्गुलौ, उच्छ्रायेण द्व्यङ्गुलौ स्याताम्। गण्डदेशौ पञ्चाङ्गुलौ, हनुश्च चतुरङ्गुल. स्यात्। कर्णरन्ध्रस्य विस्तार. एकाङ्गुल, कर्णस्य पाल्याख्याया त्रुटिकाया दैर्घ्यप्रस्थयो कश्चित् निर्दिष्टो नियमो नास्ति। चतुरङ्गुलपरिमाणा नासिका, अग्रभागे अस्या उच्चता द्व्यङ्गुलि, विस्तारश्च त्र्यङ्गुलि, नासापुटस्तु एकाङ्गुलि, अस्या विस्तार. द्व्यङ्गुलि, ओष्ठादारभ्य नासिकापर्यन्त स्थानमर्धाङ्गुलम्। एकाङ्गुल ओष्ठमानम्, मुख चतुरङ्गुलायामम्, अरि. एकाङ्गुलपरिमितस्तथा चिबुक द्व्यङ्गुलं, दन्ता. चत्वारिंशत्। तेषामुच्छ्राय अर्धाङ्गुल तन्मध्ये द्रंष्ट्रा अष्टौ। मूलदंष्ट्राया उच्चता एकाङ्गुलस्य द्वादशभागात्मिका। अक्षिणी च अङ्गुल-परिमितोच्चे तथा त्र्यङ्गुलिपरिमित. अनयोर्विस्तार। नेत्रान्तर्गत यत् कृष्णमण्डल तत्तु नेत्रत्रिभागपर्यन्त स्यात्। नेत्रमध्यस्थतारा नेत्रपञ्च-भागात्मिका। भ्रुवावपि अर्धाङ्गुलिविस्तृते। अनयोरायाम त्र्यङ्गुल स्यात्। भ्रुवोर्मध्यवर्तिस्थानं द्व्यङ्गुलपरिमित स्यात्। नेत्रान्तात् कर्णविवरपर्यन्त स्थान चतुरङ्गुलपरिमित ग्रीवाया विस्तृतिर्दशाङ्गुलं यावत् तथास्या परिधिश्च एकत्रिंशत्यङ्गुलपरिमित, स्तनयोर्मध्यवर्तिस्थानं षोडशा-ङ्गुलम्, स्तनमुखं तु षडङ्गुलपरिमितम्, स्कन्धसलग्नभागस्य बाहुमूलस्य

परिधि: षोडशाङ्गुल:, अग्रे चास्य परिणाहो द्वादशाङ्गुलः। करतलः समाङ्गुलपरिमितः दैर्घ्ये विस्तारे च पञ्चाङ्गुलः, मध्यमिका तु पञ्चाङ्गुलपरिमिता। प्रदेशिनी तथानामिका मध्यमिकाया: पूर्वदलहीना, कनिष्ठिकापि अनामिकाप्रदेशिन्यपेक्षया पूर्वदलहीना स्यात्। सर्वा अङ्गुलयः समत्रिभागेन विभजनीयाः। नखाश्च पर्वार्धा स्यु:, वृद्धाङ्गुष्ठं द्विपर्वपरिमितं त्र्यङ्गुलात्मकम्, जठरस्य परिधि: द्विचत्वारिंशाङ्गुलपरिमितः, नाभि: एकाङ्गुल:, कटिश्च द्वादशाङ्गुलपरिमिता, अस्याः परिधि: चतुश्चत्वारिंशदङ्गुलपरिमित:। अण्डकोषपयोविस्तारः चतुरङ्गुल:, लिङ्ग तु दैर्घ्येण षडङ्गुलम् तथास्य परिधिः चतुरङ्गुल: स्यात्। लिङ्गात् ऊरुद्वयपर्यन्तस्थानं चतुरङ्गुलपरिमितम्। अष्टाङ्गुलविस्तृत जानु। जङ्घायाः अग्रभागश्च द्वादशाङ्गुलपरिमित:। पादस्याग्रभागौ पञ्चाङ्गुलात्मकौ चतुर्दशाङ्गुलविस्तृतौ। पादतलस्तु द्वादशाङ्गुलदीर्घ: षडङ्गुलविस्तृत: स्यात्। पादाङ्गुष्ठौ अङ्गुलदीर्घौ स्याताम्। प्रदेशिनी अङ्गुष्ठतुल्या स्यात्। अन्याश्च अस्याष्टमभागेन हीना: स्यु:। वृद्धाङ्गुष्ठस्य नखा वृद्धाङ्गुष्ठापेक्षया भागचतुष्टयहीना:, तथा च द्वितीयाङ्गुले नखाः द्वितीयाङ्गुल्यपेक्षया भागार्धेन हीना:। शेषाङ्गुलीना नखाः तत्तदङ्गुल्यपेक्षया अष्टमभागेन हीनाः स्यु:। पार्ष्णी त्र्यङ्गुलविस्तृते तथा चतुरङ्गुलोच्छ्रिते स्याताम्।

एतत्तु हंसाख्यस्य पुरुषविशेषस्य मानम्। अन्येषां सर्वेषां निर्माणं तु अनेनैव क्रमेण स्यात्।

हंसस्य मुखमतिमनोहरम्, मध्यभागश्च सुशोभन:, गतिश्च राजहंसस्येव मनोहारिणी स्यात्। सर्पराजस्य शेषस्येवास्य हस्तद्वयं सलील स्याच्च। तस्य नयने मधुवर्णे एव गात्रच्छविश्चन्द्रवदुज्ज्वला भवेत्। मद: पद्मवत्। बाहू स्थूलौ वृत्ताकारौ च। मातङ्गस्येव तस्य गतिः स्यात्। कपोलश्च सुन्दररोमराजीभिः स्तब्ध:। मालव्यश्च मुद्गश्याम:, क्षीणमध्य, आजानुलम्बितबाहु: कठिनस्कन्धो भवेत्। तस्य नासिका च हस्तिन: नासिका

इव स्थूला मनोरमा। हनुद्वय पीवर स्यात्। रुचकस्तु शरद्गौर, कम्बुग्रीव, वलवान्, सत्यसन्ध, प्रकृत्या च रसिको भवेत्। शशको रक्तश्याम., कर्बुरक:, पूर्णगण्डश्च स्यात्। अस्य नयने मधुवर्णे च स्याताम्।

तत्परवर्तिनि सप्तत्रिंशत्तमेऽध्याये अङ्गप्रत्यङ्गमानानुसारेण पञ्च-पुरुषाणा पूरकत्वेन पञ्चस्त्रीप्रतिमानिर्माणेऽपि विधिरुपकल्पित.। इदं तु प्रतिभातं भवति यत् उपर्युक्ताया. पञ्चपुरुषप्रतिमाया. स्वस्वस्त्रीरूपमप्यासीत्। किन्तु यथा हंसादिक्रमेण पञ्चपुरुषमूर्ते. नामानि, सर्वेषा तेषा विस्तृत-विवरणानि च प्रदत्तानि न तथा स्त्रीणाम्। आसा नामानि नोल्लिखितानि, मान च यत् किञ्चित् प्रदत्तम्। ता सर्वाः पुरुषस्य समीपस्था. कर्तव्या'। पुरुष-मूर्तीनामपेक्षया अङ्गुलद्वय कृशा:, तथा कटिश्च अङ्गुलचतुष्टयाधिका भवेत्।

इत ऊर्ध्वं महापुरुपलक्षणमधिकृत्य किञ्चिदालोचितम्। यद्यपि महापुरुष इत्येव पदमत्रोपलभ्यते, तथापि अस्य व्याख्यानावसरे चक्रवर्ति-नृपाणा विवरणमेवोपन्यस्तम्। मत्स्यपुराणे चक्रवर्तिना लक्षणप्रसङ्गे उक्तं—

"महाधनुर्धराश्चैव त्रेतायां चक्रवर्तिनः।
सर्वलक्षणपूर्णास्ते न्यग्रोधपरिमण्डला:॥
न्यग्रोधौ तु स्मृतौ बाहू व्यासो न्याग्रोध उच्यते॥
व्यासेन तूच्छ्रायो यस्य अत ऊर्ध्वं तु देहिनः॥
समोच्छ्रायः परोणाहो न्यग्रोधपरिमण्डल:'[१]॥

विष्णुधर्मोत्तरानुसारेण एषा चक्रवर्तिनृपाणा कराश्च जालबद्धाः कार्या., भ्रुवोर्मध्ये क्षेमङ्करी ऊर्णा स्यात्। हस्तेषु तिस्र. मनोहराः शशक-शोणितलोहिता ईषद्वक्रा रेखाः स्यु। इन्द्रमणिमेचकच्छवि. केशाः सूक्ष्म', लोचनलोभनीय., स्नेहमिव स्रवन् स्यात्। अत्र तु केशा. षड्विधत्वेन परिचीयन्ते '—(क) कुन्तला. (गुच्छः), (ख) दक्षिणावर्ता. (वामतो

१. मत्स्यपुराणम् ४२. ६१-६२

दक्षिणदिशि प्रवर्तिताः ), (ग) तरङ्गाः ( तरङ्गमाला इव उच्चनीचाः ), (ग) सिंहकेशराः ( सिंहस्य केशर इव आकुञ्चिताः ), (ङ) दण्डराः ( दण्ड इव कठिनाः, (च) जूटटसराः (जटाबद्धाः) । यथा केशानामपि षड्विधत्वं तथा नेत्रेष्वपि विभिन्नता दृश्यते । आकारभेदेन अस्य पञ्चभेदाः परिकीर्तिताः । एषां परिमाणं लक्षणं च विश्लिष्य आलोचितम् । मान-निर्णयप्रसङ्गे यवमानमिति बहुधा उल्लिखितम् । तद् यवमानं तु स्वकीया-ङ्गुलिमानत्वेनानुमेयं भवेत् । इमे पञ्चभेदाः स्वस्ववैशिष्ट्यमण्डिताः स्वभावप्रकाशकाश्च । (क) चापाकाराः (धनुराकृतिः) । योगमार्गे यथा अधःस्थिता भूमिं प्रति दृष्टिर्निबद्धा तथैव चापाकारस्य नयनस्य वैशिष्ट्यम् । चापाकारं नेत्रं यवत्रयं भवति । (ख) मत्स्योदराः ( मत्स्यस्य उदरवत् आयताः )। कामिजनानां तथा स्त्रीणां कृते तु मत्स्योदराकृतिर्नयनं विधेयम् । यवचतुष्टयमेवास्य मानम् । (ग) उत्पलपत्राभाः ( नीलोत्पलस्य पत्रमिव उज्ज्वलाः)। विषयेषु अनासक्तानाम् उत्पलपत्रनिभं नयनं कार्यम् । षड्यवमेवास्य मानम् । (घ) पद्मपत्रनिभाः (श्वेतपद्मपुष्पमिव मनोरमाः )। भयभीतानां रोरुद्यमानानां नेत्राणि पद्मपत्राकृतीनि स्युः । मानं तु नवयवम् । (ङ) शशाकाराः ( शशक इव लोभनीयाः )। वेदनाविह्वलानां शशकाकारं नेत्रं विधीयते । मानं दशयवकम् ।

अनेन प्रकारेण सर्वे ऋषयः पितरः देवाश्च कर्तव्याः । इमे सर्वे द्युतिमन्तः यथोचितभास्वरा भवेयुः । प्रमाणानुरूपमनिन्दितं बहुरेखस्थानै-राकीर्णं सरलाकृति सुकुमारं च स्यात् । किन्तु नेदमन्तिमवाक्यम् । सर्वेषा-मङ्गानां प्रत्यङ्गानां च यथायथं मानं विवेचितमिति सत्यम् । किन्तु तथापि निर्माणकर्तुः पटुत्वं च सर्वोपरि विराजते । स्वकीयां प्रतिभामनुसृत्य स्वबुद्ध्यनुसारेणैव इमानि सर्वाणि विरचनीयानि । मूर्तीनां, प्रतिमानां, चित्राणां च गुणाधायकत्वे निर्मातुः शाश्वतिकी प्रतिभा एव कारणं भवति, न केवलं प्रतिमामानलक्षणशास्त्रविद्या ।

अष्टात्रिंशेऽध्याये देवप्रतिमाना नेत्राणि तथा मुखानि कीदृशानि कियत्परिमाणानि स्युस्तद्विषयेऽपि यथेच्छमालोचितम्। इद तु अवधेय यदत्र कुत्रापि 'देवा निमेषहीना भवन्ति'[1] इत्यस्य आलोचन न कृतम्। देवतानामुत्पलपत्राभ नयन, कृष्णतारकमध्य, रक्तान्त च स्यात्। एतानि दीर्घपक्ष्मसमाच्छन्नानि, सुचारूणि तथा सुदृश्यानि भवेयु । ईदृशानि नेत्राणि प्रजाना हितकारीणि भवन्ति। किन्तु यानि नेत्राणि पद्मपत्रान्तानि तानि तु श्रीसुखप्रदायीनि भवन्ति। एतानि मनोज्ञानि सुदृश्यानि विशालानि कृष्णताराणि, शुभलक्षणसमायुक्तानि, अन्त दुग्धवत् श्वेतानि स्यु । नेत्रलोमानि अग्रे असरलानि भवेयु ।

मुख प्रसन्न चतुरस्र तथा सुसम्पूर्णं स्यात्। अत्र च विभिन्नानि शुभलक्षणानि स्यु । दीर्घमण्डलाकारा चक्राकारा त्रिकोणादय देवप्रतिमा प्रजाना मङ्गलमिच्छद्भि सयत्न परिहर्तव्या । आसामक्षिषु पक्ष्मसु च यथोपयुक्त लोम विरचनीयम्। अन्ये अशास्तु लोमवर्जिता भवेयु । तथा सौन्दर्यमासु प्रतिमासु आधेय यथा इमा सर्वा षोडशवर्षीया लावण्यमय्यश्च प्रतीता स्यु । पञ्चपुरुषाणा मध्ये हसस्य यन्मान विश्लिष्य प्रागेव निगदितम् तदनुसारेणैव आसा देवप्रतिमाना मान परिज्ञेयम्। वदनानि प्रसन्नानि दृष्टयश्च सुस्मिता स्यु । इमाश्च मुकुटकुण्डलहारकेयूराङ्गदादिभि विविधैरलङ्कार भूषितव्या, कण्ठे मङ्गलमाल्य, गले पवित्र यज्ञोपवीत, श्रोणिदेशे च विलम्बिता मेखला, पदप्रान्ते नूपुरादीन्या भूषणानि। आजानुलम्बित कटिवास, मनोहर दुकूलम्। आसा प्रतिमाना दक्षिण जानु प्रदर्शनीयम्। मस्तकस्य ऊर्ध्वभागे तत्प्रमाणानुसारेण देवानुकारिणी मण्डलाभा प्रभा विरचनीया। आसा प्रतिमाना कीदृशी दृष्टि स्यात् तद्विषयेऽपि यथोचितमालोचितम्। आसा निर्माणेऽपि

---

१ कालिदासस्य विक्रमोर्वशीये तृतीयेऽङ्के—'देवल अणिमिसेहिं णअणेहिं मोणा विडम्बीअदि ।

यथोचितः यत्नः आधेयः। ऊर्ध्वंगामिनी अधोगामिनी तिर्यग्गामिनी दृष्टिः परिहर्तव्या। तथा या च हीना, अधिका, दीना, क्रुद्धा, रूक्षा वा भवेत् सापि परिहरणीया। ईदृग्दृष्टीना परिहारे कारणमपि पर्यालोचितम्। ऊर्ध्वदृष्टिः मरणजापिका, अधोदृष्ट्या शोको लक्ष्यते, तिर्यग्दृष्टि धननाशकारिणी, हीनदृष्ट्या मरण द्योत्यते, अधिका दृष्टिः शोकजनयित्री, दीनदृष्ट्या दैन्यं सूच्यते। रूक्षा दृष्टिः सम्पत्क्षयकरी तथा क्रुद्धा दृष्टिर्भयविवर्धिनी स्यात्।

प्रतिमानामुदरनिर्माणविधावपि केचन नियमा अनुसर्तव्या। अनुदरी अधिकोदरी, प्रतिमा विवर्जनीया। इमा यथावत् प्रमाणानुसारेणैव स्युः। वर्णं तु कान्त स्यात्, सर्वथा रूक्षता वर्जनीया। अत्र क्षतव्रणादीनि स्थान न लभेरन्। यथा आनतं प्रतीयेत एतादृशी अधिकविवृति उदरवक्त्रस्य न स्यात्। अस्य अधिकस्थूलता यथा सयत्न परिहर्तव्या तथा अधिकसूक्ष्मतापि, अल्पोदरी प्रतिमा भयाय कल्पते, अधिकोदरी च मरणसूचिका। क्षतयुक्तं यदुदर स्यात् तत्तु मृत्युजनकम्। हीनेन विनाशो द्योत्यते, उदराधिक्य शोकस्य कारण भवेत्, तथा रूक्षवर्णविशिष्टेनोदरेण भयं सूच्यते। यस्य उदरस्य मुख विवृत स्यात् तत्तु कुलनाशकर भवेत्। प्रसङ्गेऽस्मिन् बृहत्संहिताकारमतमपि उदाहर्तव्यम्—"वामावनता पत्नीं दक्षिणावनता हिनस्त्यायुः"।

मण्डलाभा च स्थान विमाय मानानुसार स्वस्थाने एव परिकल्प्य निवेदनीया। प्राच्यदेशीया आभा च धननाशाय प्रवर्तते, दक्षिणाभा मरणसूचिका, पश्चिमाभिमुखिनी सुतनाशकारिणी, उत्तरदेशीया च भयविवृद्धिमूलिका स्यात्। प्रमाणहीना मण्डलाभा नाशाय प्रवर्तत। अधिकाभया देशनाशः सूच्यते, अश्लक्ष्णा मरणनिमित्तका, क्रुद्धा रूपनाशिनी भवेत्।

न कदापि लक्षणविवर्जिता मानप्रमाणहीना प्रतिमा विरचनीया। ब्राह्मणश्रेष्ठैर्मन्त्रादिभिराहूता अपि देवास्तादृशी लक्षणप्रमाणवर्जिता प्रतिमा

नाश्रयेयु । ईदृक्प्रतिमासु नित्य पिशाचा दैत्या दानवाश्च स्थान लभन्ते । अत सर्वप्रयत्नेन परिमाणहीना प्रतिमा वर्जनीया । मानलक्षणयुक्ता च सर्वा प्रशस्ता शुभकरी । इय च आयुर्विवर्धिनी, यशोऽभ्युदयविधायिनी, धनधान्यादिसमृद्धयुन्नतिकारिणी भवति । मानलक्षणपेता प्रतिमा धन-धान्यादिक नाशयति । देवप्रतिमा सदव शोभामण्डिता कर्तव्या । मूर्तीना प्रतिमाना चित्रगतानामालेख्यादीना गति शोभना स्यात् । सिंहस्येव वीर्यवती, वृषस्य इव मन्थरा, मातङ्गस्येव विवृत्तपार्श्वा, राजहसस्येव लीलामयी मनोहारिणी च गतिर्विधेया । मूर्त्यादीनि तथा चित्राणि निय मानुसारेण प्रकल्पितानि सन्ति निर्मातु देशस्य राज्ञश्च सौभाग्य सूचयन्ति । अत सर्वप्रयत्नेन इमा सुलक्षणा कर्तव्या । सुलक्षणमेव सर्वसौन्दर्यस्याधार-भूतम् आयुरारोग्यैश्वर्यदायक परम शुभम् ।

परवर्तिनि अध्याये चित्रस्य स्थानमवलम्ब्य आलोचन प्रवर्तते । बहुमूल्यवति एतस्मिन्नशे प्रकृतपाठनिर्णयो न स्वनायाससाध्य । विभिन्नासु मातृकासु निमग्न कदाचित् मुद्रितश्चाय भागो बहुविचित्र पाठमुपस्थापयति, अत बहुप्रयासमास्थाय एव पाठो निर्णेय । अत्र तु चित्रस्य नवस्थान-मालोच्यते । अर्वाचीनकालेषु बहुषु वास्तुशास्त्रग्रन्थेषु चित्रकलासम्बन्धिषु पुस्तकेषु च इदं नवस्थानमवलम्ब्य बहु आलोचितम् । एषा ग्रन्थाना मध्ये समराङ्गणसूत्रधार ( ईसवीये एकादशशतके ), सोमेश्वरस्य अभिलाषार्थ-चिन्तामणि ( ईसवीये द्वादशशतके ), श्रीकुमारस्य शिल्परत्नम् ( ईसवीये षोडशशतके ) उल्लेखनीया पदवी भजन्ते । एतन्मध्ये समराङ्गण सूत्रधारस्य अयम् अश भृश प्रमादपूर्ण । यद्यप्यस्य एकोनाशीतितमेऽध्याये नवस्थानवर्णनप्रसङ्गे नववृत्तेरप्युल्लेखो दृश्यते तथा च साकल्येन ऊनत्रिंशत्स्थानान्यपि उपकल्पितानि, तथापि दुष्टपाठबाहुल्यात् अशस्यास्य यदभिप्रेत स्पष्ट वक्तव्य न तदस्माभिरनायासेन ज्ञातु शक्यते । सोमेश्वरस्य अभिलाषार्थचिन्तामणौ तृतीयेऽध्याये तथा श्रीकुमारस्य शिल्परत्ने चतु-षष्टितमेऽध्याये चित्रविषयको निबन्ध उपस्थापित । किन्तु विषयेऽस्मिन्

ग्रन्थद्वयस्य ऐकमत्यं दृश्यते। उभयत्रपाठोऽपि प्रायशः न भिद्यते। एतादृशस्य पाठैक्यस्य कारणमप्यस्ति। इमौ द्वौ ग्रन्थौ नवस्थान-विषये ब्रह्मसूत्रस्य तथा पक्षसूत्रस्य यः पाठः आसीत् तमवलम्ब्य एव प्रवर्तितौ वर्तेते। विष्णुधर्मोत्तरपुराणे नवस्थानप्रस्थानात्मकोऽशो वर्तते। तत्र यद्यपि ब्रह्मसूत्रस्य पक्षसूत्रस्य वा नामोल्लेखो नास्ति तथापि विष्णु-धर्मोत्तरपुराणात् प्राक् कश्चित् पाठमवलम्ब्य एव अस्य पाठः प्रचलितो नास्त्यत्र सन्देहलेशोऽपि। किन्तु विष्णुधर्मोत्तरात् शिल्परत्नाभिलषितार्थ-चिन्तामणीनाम् अस्मिन् विषये यन्मतवैषम्यं पाठपार्थक्यं च वर्तते तत् सम्यगालोचनीयम्।

भोजस्य समराङ्गणसूत्रधारे एकोनाशीतितमाध्यायं सम्यग् विचार्य स्थिरीकृत्य यानि नवस्थानानि लभ्यन्ते तानि दिवत्यम्—ऋज्वागतम्, अर्ध-ऋज्वागतं, साचीकृतं, अध्यर्धाक्षम्—इमानि सर्वाणि ऊर्ध्वागतानि। एतान्येव यदा परावृत्तानि भवन्ति तदा नवीनस्थानचतुष्टयानां प्रादुर्भावो जायते। तानि यथा—ऋज्वागतपरावृत्तम्, अर्धऋज्वागतपरावृत्तं, साचीकृतपरावृत्तं, अध्यर्धाक्षपरावृत्तम्; नवमस्थानं तु पार्श्वागतम्। इदं च सदैव भित्तिकविग्रहं स्यात्। शिल्परत्नाभिलषितार्थचिन्तामणिषु मुख्यतया पञ्चस्थानस्योपलब्धिर्भवति। यथा—ऋजुः, अर्धर्जुः, साची, द्यर्धाक्षी (द्व्यर्धाक्षी), पार्श्वगतश्च। इमानि पञ्च मुख्यस्थानानि। एषां मध्ये प्रथम-चतुष्टयं परावृत्तं कृत्वा ऋजुपरावृत्तम्, अर्धर्जुपरावृत्तं, साचीपरावृत्तं, द्यर्धाक्षीपरावृत्तम् (द्व्यर्धाक्षीपरावृत्तम्) इति साकल्येन नवस्थानानि समुपलभ्यन्ते। मार्कण्डेयवचनानुसारेण रूपाणां शुभाकारविकाराणि नानावर्णधराणि स्थानानि नवसंख्येयानि। तानि यथा ऋज्वागतम्, अनृजु, साचीकृतशरीरम्, अर्धविलोचनं, पार्श्वागतं, परावृत्तं, पृष्ठागतं, परिवृत्तं, समानतं च।

अत्र सम्यग्विश्लेषणेनेदं प्रतिभाति यद् विष्णुधर्मोत्तरस्य अनृजुः शिल्परत्नादीनामर्धर्जुः एव। साचीकृतशरीरं हि साची, अर्धविलोचनम्,

अध्यर्धाक्षमिति समानार्थप्रतिपादकमेव। पार्श्वागतमुभयसाधारणम्। क्षयवृद्धयनुसारत त्रयोदशस्थानानि समुपलभ्यन्ते—तानि यथा—दृष्ट्यागतम्, अनृजुगतं, मध्याध्यर्धाधम्, अर्धार्धं, साचीकृतमुख, नत, गण्डपरावृत्त, पृष्ठागत, पार्श्वागतम्, उल्लेप, चलित, उत्तान, वलितम्।

इमानि स्थानानि सस्थानानि च सम्यग् व्याख्यानमर्हन्ति।

ऋज्वागतस्थान तु अभिमुख तथा सुसम्पूर्णं भवति। तत्र अङ्गप्रत्यङ्गानि स्पष्टतया प्रतीयन्ते। अस्य अङ्गानि मनोरमाणि, वर्तिका कोमला कुन्दावदाता च भवेत्। स्थानमिद मधुरं, पवित्र, तथा सुस्पष्टरेखाभिरलङ्कृत स्यात्। अस्य गात्राणि तु न कदापि क्षीणत्वमाप्नुयु.।

अनृजुस्थाने मुखस्य वक्षसः उदरस्य च सम्मुखत पूर्णता स्यात्। किन्तु कटिदेशे स्कन्धे ऊरुप्रदेशे चेद क्षीणम्। नासापुटादधरोष्ठं चतुर्थांशम्। शरीरतो भागत्रय क्षयमापन्नम्। प्रकृतस्थानलम्भोपपादनात् अस्य अधिक सौन्दर्यं सूच्यते। अत्र बहुध नृत्तमुद्रा प्रदर्श्यन्ते।

साचीकृतशरीरे भूमिलम्भस्तु तिर्यक्। इद तु सुकुमार, सर्वाङ्गमनोहर, लोचनलोभनीयम्। अत्र वर्तिकाकार्यं तु अनिन्द्य स्यात्। इदमधस्य चतुर्भागेन क्षीण भवेत्। भ्रुवो च अर्धांशेन न्यूनौ। ललाटस्य नासाग्रभागस्यापि अर्धांशो लुप्यते। अवशिष्ट अर्धांश अङ्गुलचतुष्टयेन क्षीण.। नयनमपि अङ्गुलद्वयेन क्षीणत्वमुपगतम्। भ्रूरेखा अङ्गुलद्वयेन सुसम्—कोमलरेखाभिरङ्कितं स्यात्। नयनस्य कृष्णाशा न छायागता नैव ऋजवो न चापि कोपनात्मिका स्यु।

अर्धविलोचनस्थानस्य महद् वैचित्र्य दृश्यते। अत्र मुखे एकमेव नेत्रमुपलभ्यते, अपरं तु लुप्तम्। भ्रुवोरपि तथैवावस्था। अर्थात् एका एव भूस्तया दृश्यमाना। ललाटवक्रता एकमात्रात्मिका। गण्डस्थलं मानेन अर्धाङ्गुलम्, अपर अर्धांशश्च लुप्त स्यात्। ये तावद् दृश्याना सारा. ते एव यथायथ प्रदर्शनीया नान्ये। कण्ठरेखा अर्धाङ्गुलावच्छिन्ना, हनो.



समपाद स्थानम्

विस्तार एकयवात्मक (अङ्गुलाष्टमभागात्मक) स्यात्। सम्मुखस्थ वक्षः अर्धांशेनैव प्रदर्शनीयम्। अस्य अपरार्धांशो लुप्तो भवेत्। अनेन प्रकारेण नाभिमुखात् केवलम् अर्वाङ्गल स्थानमेवावशिष्यते। कटिदेशस्यापि अर्धभाग एव प्रदर्शित स्यात्। यत् किञ्चिदपर प्रदर्शनीय भवेत् तत्तु अर्धभागेनैव कार्यम्। इदमर्धविलोचनस्थानमाकारेणैव परिज्ञेयम्। इद च छायागत-मित्यपरनाम्नापि परिचीयते।

पार्श्वागतं स्थान द्वितयम्—अत्र केवल वामपार्श्वमथवा दक्षिण-पार्श्वमेव प्रदर्श्यते न तूभयम्। अङ्गस्यापरे भागा लुप्ता अथवा क्षय-मापन्ना.। अङ्गस्य गतिरपि ईदृशी एव। अवरोहवत् एक नासारन्ध्र, एकं ललाट, (ललाटार्ध) एक नेत्र, एका च भ्रू , एक श्रोत्र, चिबुकार्धमेव प्रदर्श्यते। तत् कपोलस्थल यत् शिरस्थबालै आकीर्णं प्रदर्शनीयम्। इद निर्दिष्ट-मानलक्षणान्वित, माधुर्यलावण्यादिगुणोपेत भित्तिकसहित भवेत्।

परावृत्ताख्यस्थाने परागतं मुखम् एकया कलया हीनं स्यात्। कण्ठदेशे, स्कन्धे, चिबुके, ललाटे च एककलाया न्यूनता। बाहुस्थल, वक्ष, कटिस्थान, गोपनाङ्ग कलाद्वयहीनं जायते। किन्त्वपराणि अङ्गानि न भृश कृशी-कृतानि स्यु.। भागानुसारेणास्य मान भवेत्।

पृष्ठागतस्थाने सर्व शरीरम् अतीव सौन्दर्येण पृष्ठत एव प्रदर्शनीयं भवति। भ्रूलेखा ईषद्वक्रभागमुपगता स्यात्। प्रत्यङ्गसन्धिस्थान वक्रम्, अपाङ्गम् ईषत् प्रदर्शयितव्यम्। अपाङ्गदत्तदृष्टिः कपोलस्थलमतिमनोहर प्रतीयेत। इद शान्त, सुस्थिर, लोचनलोभनीय भवेत्। सौन्दर्यं माधुर्यं चात्र वर्तते। इद पृष्ठागतं स्थान पुस्तकेषु चित्रेष्वपि प्रायश. समुपलभ्यते।

परिवृत्तस्थाने उत्तमाङ्गमवश्यमेवैकेन भागेन अर्थात् अङ्गुलचतुष्टयेन न्यून स्यात्। परिवृत्तिकारणात् ऊर्ध्वभाग क्षामेण अङ्गेन सह समभावेन

अवस्थितो भवेत्। अर्धाङ्गं पुरत एव सन्निहितमस्ति। छायागतरीतिमनुसृत्य द्वौ अर्धांशौ यथाक्रमेण ऊर्ध्वे निम्नभागे च प्रदर्शनीयौ। अंशद्वयस्य परस्परं सादृश्यं ग्राम्यम्, निष्प्रयोजनीयं च। दृष्टेर्विनोदनाय मध्यांशः यथोचितं क्षयमुपगच्छेत्।

यत् नवमं स्थानं समागतं नाम तत्र सम्पूर्णनयनदृष्टिः जघनदेशे प्रतिष्ठापिता स्यात्, पादगुल्फं दृश्यमानं, कटिभागस्य ऊर्ध्वांशः क्षयमागतः, अपराशश्च दृश्यते। पादाङ्गुलितल लुप्तं किन्तु पादतलद्वयं सम्पूर्णं दृश्यमानं भवेत्। चतुर्दिक्षु सुसम्पूर्णमिदं भवेत्। भयानकरसोऽत्र अनेन न ध्वन्यते। बाहुश्च प्रकाशितः स्यात्। मुखम् अवलुप्तं भवेत्, बन्धरस्यापि लोपः, तथा च एका जङ्घा अपि अवलुप्ता स्यात्।

एषां नवस्थानानां शिल्पिनः प्रज्ञाबाहुल्यात् बहवो विकारा अपि भवितुमर्हन्ति। इमानि सर्वाणि स्वकीयैः लक्षणैः अवच्छिन्नानि भवेयुः इति नास्ति सन्देहः। एषां पश्चात् पृष्ठभूमिः समानभागेन विरचनीया, यथाविधि च कर्तव्या। पृष्ठभूमिभागे प्रथमतः यथायथं मानं परिकल्पनीयम्। तदनन्तरं च लक्षणपरिमाणानुसारेण इमानि नवस्थानानि प्रयत्नतः लेख्यानि स्युः। सर्वेऽपि भावा एभिरेव नवस्थानैः प्रकाशयमर्हन्ति। स्थावरजङ्गमात्मके सम्पूर्णे भूमण्डले नवस्थानेभ्यः अधिकं नूतनं किञ्चिन्नैवोपलभ्यते। अर्थात् इमानि नवस्थानानि स्थावरभूतलस्य जङ्गमजीवलोकस्य च सर्वान् भावान् भावविकारांश्च प्रकाशयितुं शक्नुवन्ति।

अतः परं चित्रसूत्रस्यान्तिमपर्याये क्षयवृद्धिमधिकृत्य आलोचितम्। चित्रकृद्भिः अवश्यमेव समासेन अथवा संक्षेपेण अस्योपयोगित्वं ज्ञातव्यम्। अङ्गप्रत्यङ्गानां संस्थानादेव क्षयवृद्धी प्रादुर्भवतः। स्थानानां वैषम्यात् आसामपि त्रयोदश भेदा उपलभ्यन्ते। इमानि त्रयोदशस्थानानि उताहो त्रयोदशसंस्थानानि एवंक्रमेण परिचीयन्ते—दृष्टयागतम्, अनृजुगतं,

मध्यार्धार्धम्, अर्धार्धं, साचीकृतमुखं, नतं, गण्डपरावृत्तं, पृष्ठागतम्, उल्लेपं, चलितम्, उत्तानं, वलितम्—इमानि सर्वाणि संस्थानानुसारतः परिकल्पनीयानि। मण्डलानि वैशाखप्रत्यालीढस्खलनैः प्रदर्शनीयानि। पादावपि समाः अर्धसमा वा स्युः। चलानि सुस्थितानि भवेयुः।

प्रसङ्गेऽस्मिन् आलीढप्रत्यालीढादीनां यथार्थावबोधाय किञ्चिदालोचनमुचितम्। आलीढपदं तु आलीढासननाम्ना अथ च प्रत्यालीढपदं प्रत्यालीढासननाम्नापि परिचीयेते। यदा दक्षिणं जानु अग्रे न्यस्य वामजानु पश्चात् नीयते तदेवासनम् आलीढासनमिति। अस्य विपरीतं तु प्रत्यालीढम्। अर्थात् अत्र वामजानुन. अग्रे स्थापनं तथा च दक्षिणजानु पश्चात् नीयते। आलीढप्रत्यालीढभङ्गीनां निदर्शनं बुद्धगयायां प्राचीनप्रस्तरालेख्ये एवोपलभ्येत। तत्र बाणनिक्षेपरतयो. ऊषाप्रत्यूषयोः सूर्यसमन्वितयोः ये मूर्ती ते तु आलीढप्रत्यालीढान्विते एव। पूर्णियाप्रान्ते प्राप्तासु कतिपयमुद्रासु आलीढभङ्गिः समुपलभ्यते। मोयस् (Maues) इत्यस्य ताम्रमुद्रासु शिवरक्षितस्य धातुमुद्रासु च समुपलब्धायाः शिवमूर्तेः आलीढभङ्गिः द्रष्टव्या। तन्त्रसारग्रन्थे तारासम्बन्धिनी इयमुक्तिः स्मर्यते—'प्रत्यालीढपदां घोराम्।'

समार्धसमपादात् द्विविधं स्थानं निष्पाद्यते। पदभूमिष्ठं यत् समपादं तत्तु ऋज्वागतेष्वेव दृश्यते। तदितरमर्धसमपादं मण्डलेषु समुपलभ्यते। तथा चोक्तं—

"तद् गत्वा पदभूयिष्ठं स्थानं समपदं स्मृतम्।
मण्डलं च द्वितीय स्यात्...... .................॥"

धन्विनां वैशाखम्, आलीढं, प्रत्यालीढं ज्ञेयम्। कलिकातायां भारतीयपुरातत्त्वसंग्रहालये अंशावशिष्टे कस्मिंश्चित् गान्धारशिल्पनिदर्शने रथस्थितः सूर्यः तत्सन्निहिता बाणनिक्षेपरता एका मूर्तिः पूर्वोक्तभङ्गिभिरवलोक्यते। खड्गचर्मधारिणा चित्रं विषमपदं गोसूत्रकगतं स्यात्।

